11075CH10

## दशमः पाठः

# यद्भूतहितं तत्सत्यम्

प्रस्तुत कथा विश्वप्रसिद्ध संस्कृत कथाकार आचार्य केशवचन्द्र दाश लिखित कथासंग्रह से संकलित की गयी है। भारतवर्ष में प्राचीन काल से ही दादा–दादी और नाना–नानी की कहानियाँ प्रचलित हैं। परम्परागत रूप में लिखी हुई ये कथाएँ बालपाठकों के मानसिक संस्कार को बनाये रखने में सक्षम हैं।

प्रस्तुत कथा में उस सत्य की वास्तविक सत्यता प्रमाणित की गयी है जो सदैव विश्व के लिए श्रेयस्कर हो।

**एकस्मिन् ग्रामोपान्ते पद्मिनी नाम्नी एका पुष्करिणी आसीत्। तत्र ग्रामस्य जनाः स्नानं कुर्वन्ति। वसनं क्षालयन्ति। तस्या एव जलमानीय पिबन्ति, पाकादिकर्म च कुर्वन्ति। तत्रैव गोमेषच्छागादीनां स्नानमपि सम्पादयन्ति। पुष्करिणीं परितः नाना वृक्षाः सन्ति। केचन वृक्षाः तटसंलग्नाश्च वर्त्तन्ते। पुष्करिण्याः अपरभागे एकः आश्रमः अस्ति। तत्र एको मुनिः निवसति। सोऽपि तर्पणादिकं कर्म तत्र करोति। सः जनान् अनुनयति। वारं वारमपि उपदिशति। परं न कोऽपि तस्य वचनं शृणोति।**

**एकदा मुनिः चिन्तामग्नः– केन प्रकारेण इमे जनाः बोधयितव्याः? पुष्करिणीतः पङ्कोद्धारो न भवति। प्रतिदिनं च जलं प्रदूषितं भवति। तत् प्रदूषितं जलं पीत्वा जना अपि रुग्णा भवन्ति। कथं च इमे वारणीयाः...?**

**सहसा कोलाहलःश्रुतः। मुनिः बहिरागत्य अपश्यत्। केचन जना एकं बालकं ताडयन्ति। तं च भर्त्सयन्ति। बालकः भयेन कम्पते क्रन्दति च। मुनिः तत्र उपस्थितः। जनान् वारयित्वा**

अपृच्छत्। किम् अभवत्? किमर्थं भवन्तः एनं ताडयन्ति? जनाः अवदन्। एष मिथ्यावादी। सदैव मिथ्याभाषणं करोति। वृथा सर्वान् प्रतारयति। सद्यः अस्मान् प्रतारितवान्।

मुनिः बालकम् अपृच्छत्।

अरे! सत्यं न वदसि?

बालकः कम्पितकण्ठेन अवदत्।

सत्यं किम्?

मुनिः तमाश्वासितवान्।

– न जानासि? तर्हि मया सह आगच्छतु।

एवम् उक्त्वा तस्य करं धृत्वा मुनिः आश्रमं प्रति बालकम् आनीतवान्।

मुनिः अचिन्तयत् – अयमेव समुचितः समयः। अस्मिन्नवसरे ग्राम्यजनाः अवश्यं शिक्षयितव्याः। ततः मुनिः बालकमपृच्छत्।

– किं तव नाम?

– नाम्नाऽहं कृष्णः।

– भवतु, केन प्रकारेण मिथ्या कथयसि?

– यथेच्छं वदामि।

– तर्हि इमां पुष्करिणीं दृष्ट्वा किमपि कथय।

बालकः कृष्णः प्रसन्नः सञ्जातः। सहर्षं च अवर्णयत्–

जलेऽस्मिन् एको महान् मत्स्यः अस्ति। भोः! जनाः

आगच्छत .................. पश्यत ..............., कीदृशं सः खेलति।

मुनिः अवदत् : साधु ............... सम्यक् चिन्तितम्। तर्हि श्वः प्रभाते ग्राम्यजनान् साधु एतावद् वद।

कृष्णः किञ्चित् कुण्ठितोऽभवत्।

– नहि, ते मां ताडयिष्यन्ति।

– अरे, नहि ...............। अनन्तरं मामेव साक्षीकरिष्यसि।

अपरप्रभाते कृष्णः ग्रामस्य प्रतिमार्गं जनान् अवदत्–पुष्करिण्याम् एको महान् मत्स्यो मया दृष्टः।

केचन अवदन्-

- अरे, त्वं मिथ्यावादी। तव वचने को विश्वासः?

तत् क्षणं कृष्णः उक्तवान्।

तदानीं मया सह मुनिः आसीत्। सोऽपि दृष्टवान्। आगच्छ .........तत्र पृच्छ .......................।

मुनिं साक्षिरूपेण स्वीकृत्य ग्राम्यजनाः अपरदिने मत्स्यान्वेषणं कृतवन्तः। अन्ततः सर्वे मिलित्वा पुष्करिणीं प्रविष्टाः। मत्स्यान् च धृतवन्तः। किन्तु महामत्स्यस्य सन्धानं न प्राप्तम्। दिनपूर्णं ते अन्विष्टवन्तः। सायंकाले नितरां विरक्ताः अभवन्। मुनिमुपगम्य सरोषमवदन्-

- किं भवानपि अस्मान्प्रतारयति?

मुनिः धीरभावेन अवदत्।

- अरे! महामत्स्यः किं सरलतया धर्तुं शक्यते?! तदर्थं श्रमः आवश्यकः। श्वः प्रभाते बन्धच्छेदं कृत्वा जलं निष्कासयत।

तद्रात्रौ ग्राम्यजनानां नेत्रयोः निद्रा नास्ति। ते प्रातरागत्य प्रथमतः तटवर्तिवृक्षाणां छेदनं कृतवन्तः। बन्धच्छेदं कृत्वा जलं च बहिष्कृतवन्तः। एवं प्रकारेण कति दिनानि व्यतीतानि। ततः पङ्कोद्धारं कृत्वा पुष्करिणीं गभीरां कृतवन्तः। पङ्कं च आनीय शस्यक्षेत्रे प्रसारितवन्तः - इत्थं निदाघकालः उपगतः। सहसा वृष्टिरभवत्। पुष्करिणी च पूर्णा सञ्जाता। निर्मलं जलं दृष्ट्वा सर्वे प्रसन्नाः अभवन्। तटानां परिष्करणेन सर्वत्र सौविध्यमनुभूतम्।

**– इतः यदि कश्चित् जलं दूषयिष्यति सः दण्ड्यो भविष्यति। एकदा मुनिः एकस्मिन् तटे कृष्णं दृष्ट्वा आकारितवान्। तम् आश्रम- मानीय अपृच्छत्।**

**– अरे, कृष्ण! सत्यं किं ज्ञातं न वा?**

**– न ज्ञातम्।**

**– अरे! सत्यकथनेन केवलं सत्यं न भवति। यत् कल्याणकरं वचनं तदपि सत्यम्।**

**– पितामही पुलोमजामबोधयत्। अत एव अस्माकं शास्त्रे वर्तते–**
**सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत्।**
**यद्भूतहितमत्यन्तमेतत् सत्यं मतं मम।।**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **ग्रामोपान्ते** | – | ग्रामस्य उपान्ते, गाँव के पास। |
| **पुष्करिणी** | – | स्त्री० प्रथमा ए० व०, बावड़ी। |
| **तस्या एव** | – | तस्याः + एव, उससे ही। |
| **तत्रैव** | – | तत्र + एव, वहीं। |
| **गोमेषच्छागादीनाम्** | – | गोमेष + छाग + आदीनाम्, गाय, भेड़, बकरी आदि के। |
| **तटसंलग्नाश्च** | – | तटसंलग्नाः + च, किनारे के साथ लगे हुए। |
| **सोऽपि** | – | सः + अपि, वह भी। |
| **चिन्तामग्नः** | – | चिन्तायां मग्नः सप्तमी तत्पु० चिन्ता में डूबा हुआ। |
| **बोधयितव्याः** | – | बुध् + णिच् + तव्यत्। पुं. प्र. वि. बहु. व., समझाया जाये। |
| **पङ्कोद्धारः** | – | पङ्कस्य उद्धारः, षष्ठी तत्पु० कीचड़ को निकालना। |
| **प्रदूषितम्** | – | प्र + दूष् + णिच् + क्त, नपुं०, प्र० वि०, ए० व०, गन्दा किया हुआ। |
| **प्रतिदिनम्** | – | दिनं दिनं प्रति, अव्ययीभाव समास प्रतिदिन। |
| **वारणीयाः** | – | वृ + णिच् + अनीयर्, पु० प्र० वि० बहु० व०, रोका जाये। |

**बहिरागत्य** – बहिः + आगत्य, बाहर आकर।

**आगत्य** – आ + गम् + क्त्वा >ल्यप्, आकर।

**भर्त्सयन्ति** – भर्त्स् – लट् ल०, प्र० पु० बहु० व०, डाँटते हैं।

**उपस्थितः** – उप + स्था + क्त, पुं० प्र० वि० ए० व०, आया है।

**वारयित्वा** – वृ + णिच् + क्त्वा >ल्यप् रोककर।

**सदैव** – सदा + एव, सदैव।

**सद्यः** – शीघ्र (अव्यय)।

**प्रतारितवान्** – प्र + तृ + णिच् + क्तवतु, ठगा।

**कम्पितकण्ठेन** – कम्पितः कण्ठः यस्य सः तेन, बहु० स०, डरे स्वर से।

**आश्वासितवान्** – आ + श्वस् + णिच् + क्तवतु पुं० प्र० वि० ए० व०, आश्वासन दिया।

**अस्मिन्नवसरे** – अस्मिन् + अवसरे, इस अवसर पर।

**ग्राम्यजनाः** – ग्राम्याः जनाः, कर्मधारय, गाँव के लोग।

**शिक्षयितव्या** – शिक्ष् + णिच् + तव्यत्। पुं० प्र० वि० बहु व०, शिक्षित किये जाने चाहिए।

**नाम्नाऽहम्** – नाम्ना + अहम्, नाम से मैं।

**यथेच्छम्** – इच्छाम् अनतिक्रम्य, अव्ययीभाव, इच्छा के अनुसार।

**दृष्ट्वा** – दृश् + क्त्वा, देखकर।

**सञ्जातः** – सम् + जन् + क्त० पुं० प्र० वि०, ए० व०, हो गया।

**जलेऽस्मिन्** – जले + अस्मिन् इस पानी में।

**सहर्षम्** – हर्षेण सह, अव्ययीभाव स० खुश होकर।

**कुण्ठितोऽभवत्** – कुण्ठितः + अभवत् दुःखी हुआ।

**साक्षीकरिष्यसि** – असाक्षिणं साक्षिणं करिष्यसि। साक्षिन् + च्वि + कृ + लृट् मध्यम पु० ए० व०, साक्षात् करोगे।

**प्रतिमार्गम्** – मार्गं मार्गं प्रति, अव्ययीभाव, प्रत्येक मार्ग में।

## अभ्यासः

**1. अधोलिखितानां प्रश्नानामुत्तराणि संस्कृतभाषया देयानि**

(क) अस्याः कथायाः लेखकः कः अस्ति?

(ख) पुष्करिण्याः नाम किमासीत्?

(ग) मुनिः कैः कारणैः चिन्तितः आसीत्?

(घ) मुनिः जनान् किम् अपृच्छत्?

(ङ) बालकः कृष्णः पुष्करिण्याः विषये किम् अकथयत्?

(च) महामत्स्यस्य सन्धानम् कुत्र न प्राप्तम्?

(छ) वास्तविकम् सत्यम् किमस्ति?

**2. मातृभाषया भावार्थं लिखत**

(क) पुष्करिणीतः पङ्कोद्धारो न भवति।

(ख) ग्राम्यजनाः जलशोधनार्थम् अवश्यं शिक्षयितव्याः।

**3. मातृभाषया आशयं स्पष्टीकुरुत**

"सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत्।
यद्भूतहितमत्यन्तमेतत् सत्यं मतं मम।।"

**4. अधोलिखितानां शब्दानां पदपरिचयं लिखत**

आनीय, असन्तुष्टः, वारयित्वा, प्रतारितवान्, सम्यक्, आसीत्, प्रसन्नाः, श्रेयः, परिष्करणम्, प्रथमतः।

**5. रिक्तस्थानानि पूरयत**

(क) पुष्करिणीम् ........................ नाना वृक्षाः सन्ति।

(ख) केन प्रकारेण ........................ बोधयितव्याः।

(ग) प्रदूषितं जलं ........................ जनाः अपि रुग्णाः भवन्ति।

(घ) जलेऽस्मिन् ........................ अस्ति।

(ङ) श्वः प्रभाते ........................ कृत्वा जलं निष्कासयत।

**6. सन्धिच्छेदं कुरुत**

तत्रैव, सोऽपि, पङ्कोद्धारः, अस्मिन्नवसरे, यथेच्छम्, तद्रात्रौ।

**7. सविग्रहं समासनाम लिखत**

तटसंलग्नाः, असन्तुष्टः, मिथ्यावादी, कम्पितकण्ठेन, ग्राम्यजनान्, बन्धच्छेदम्, निर्मलम्।

## योग्यताविस्तारः

**समानान्तरसूक्तयः**

(1) सत्यं नाम मनोवाक्कायकर्मभिः भूतहितार्थमभिभाषणम्।
(*शाण्डिल्योपनिषद्*)

(2) अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते।।
(*श्रीमद्भगवद्गीता 17/15*)

(3) सत्यं च किं भूतहितं सदैव। (*शङ्कराचार्यप्रश्नोत्तरी–22*)

(4) सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत्।
यद्भूतहितमत्यन्तं तत्सत्यमिति कथ्यते।।
(*व्याख्यानमाला 4/9*)

(5) नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम्।
न हि तीव्रतरं किञ्चिद् अनृतादिह विद्यते।।
(*व्याख्यानमाला 4/2*)